# १८—बुद्धिहीना विनश्यन्ति ।

कस्मिंश्चिन्नगरे चत्वारो ब्राह्मणपुत्राः परं मित्रभावमुपगता वसन्ति स्म । तेषां त्रयः शास्त्रपारङ्गताः किन्तु ते बुद्धिहीनाः । सुबुद्धिर्नाम चतुर्थश्चतुरः किन्तु शास्त्रपराङ्मुखः । एकदा ते सर्वे मिथोऽमन्त्रयन्त वयं देशान्तरं गत्वा भूपं च तोषयित्वा द्रव्यार्जनं कुर्म इति । अतः शुभदिने ते प्रातिष्ठन्त । मार्गे ज्येष्ठोऽवदत् । वयं त्रयो नृपप्रसादं लभामहे यतो वयं शास्त्रनिपुणाः । किन्त्वयं सुबुद्धिः शास्त्रविमुखः । अतः केवलया बुद्ध्या नृपप्रसादं स न लभेत इति ।

एवं यावत्ते मार्गेण गच्छन्ति तावत्तैरटव्यां मृतसिंहस्यास्थीनि दृष्टानि । तत्रैकेनोक्तम् । एकदाऽहं विद्याप्रभावं दर्शयामि । किञ्चिदेतत्सत्त्वं मृतं वर्तते । तद्विद्याप्रभावेण सजीवं कुर्मः । अहमस्थिसञ्चयं करोमीति । एवमेकेनास्थिसञ्चयः कृतः । द्वितीयेन चर्ममांसरुधिरं च संयोजितम् । तृतीयोऽपि यावत्तस्मिञ्जीवप्रदानायोद्यतस्तावत्सुबुद्धिस्तं तस्माद्व्यवारयदवदच्च । एवं युष्माभिः सिंहो निष्पाद्यते । यदि त्वमेनं सजीवं करोषि तर्हि स सर्वानस्मान्व्यापादयति । अनेन वचनेन क्रुद्धः स तृतीयो ब्राह्मणोऽवदत् । धिङ् मूर्ख नाहं विद्यां विफलतां नयामीति । तदा सुबुद्धिनोक्तं प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामीति । पश्चाद्यावत्तृतीयेन स सिंहः सजीवः कृतस्तदैव स तान्सर्वानमारयत् । चतुर्थस्तु सिंहस्य गमनादनन्तरं वृक्षादवतीर्य गृहं गतः । अत इदमुच्यते—

> वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
> बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥

---

टीका

'अस्थीनि—हाड़' [illegible]
[illegible]

'निष्पाद्यते—स्मामहे—व्यापादयति' या वर्तमानकाळी रूपाचा उपयोग भविष्यकाळार्थी केलेला आहे.

## अभ्यास

१ ब्राह्मणपुत्राः कादृशा आसन्। किं तेऽमन्त्रयन्त। मार्गे तैः किं दृष्टम्। किं दर्शयितुमैच्छन् ब्राह्मणपुत्राः। तदा सुबुद्धिस्तान् किमुपादिशत्। कः परिणामः स्तपामविचारस्य।

२ कर्तृपदें योजा —१ भूप तुष्यति। ——— भूप तोषयाम। २ सिंह निष्पाद्यते। ——— सिंह निष्पादयथ। ३ सर्वे व्यापद्यन्ते। ——— सर्वान् व्यापादयति। ४ त नय अन्विष्यन्त। ——— तान् श्वान् अमारयत्।

३ बुद्ध्या हीना —बुद्धिहीना। शास्त्रात् विमुख —शास्त्रविमुख। शास्त्रेषु निपुण —शास्त्रनिपुण। } सामर्थ्ये समासाचा अर्थ पूर्ण होई म्हणून प्रथम पदाचा संबंध द्वितीय पदाशी ज्या विभक्तीनें दर्शविला जातो त्या विभक्तीचा तत्पुरुष समास होतो.

---

# १९—यतिद्रव्यनाशः।

कस्मिंश्चिद्विविक्तप्रदेशे आसीत्कस्यचित् कुन्धमतेर्नाम यतेराश्रमः। बहवो जनास्तस्याश्रमं प्रतिदिनमगच्छन्ननुग्रहाय। अतस्तेन यतिना तेभ्यो बहून्युपायनानि लब्धानि। तेषां विक्रयेण तेन प्रभूतो वित्तसञ्चयः कृतः। तद्द्रव्यं तेन कक्षान्तरं एवास्थाप्यत। यतः कस्मिन्नपि न तस्य विश्वासः। एकदाऽऽषाढभूतिर्नाम स्तेनस्तस्य वित्तमपश्यद् चिन्तयच्च। अहं भवामि यतेः शिष्यः। तथा च तेन सहैकत्रोषित्वा तस्य धनमपहरामि क्रमश इति। अतः स यतेः समीपं गत्वा तं च साष्टाङ्गपातं प्रणम्य प्रार्थयत। यतिश्रेष्ठ अहं विरक्तः संसाराद्।

अत इच्छामि तस्मात्मुक्तिम् । उपदेशग्रहणायैवाहमत्रागत इति । तस्य निष्ठां दृष्ट्वा स यतिस्तस्य तत्रावस्थानमन्वमन्यत । केन-चित्कालेन स स्तेनो यतिं भक्त्याप्रीणयत् । यतिरपि तं ज्ञानमार्ग-मुपादिशत् ।

एकदा स यतिर्भोजनार्थं ग्रामान्तरं आहूतः । अतः शिष्येण सह स प्रस्थितः । प्रवाससमये चित्तं यतेः कक्षान्तरं पर्यासीत् । मार्गे ताभ्यामेका नदी दृष्टा । तदा यतिनोक्तम् मध्याह्नोऽधुना । अतः स्नानार्थमहं नदीतीरं गच्छामि । त्वमत्रैव मां प्रतीक्षस्व इति । गमनात्प्राग्यतिः स्वद्रव्यं कन्थामध्ये स्थापयित्वा स्नानार्थं गतः । स आपादमतिस्तत्सर्वमपश्यत् । यावत्स यतिर्गतस्तावदेव स धनं गृहीत्वा सुदूरं पलायत । स्नानादनन्तरं स यतिर्वृक्षमूलमागतः । किन्तु तेन शिष्यो न दृष्टः । अतः कन्थायां द्रव्यमस्ति न वेति निपुणं व्यलोकयत् । तेन शिष्येण द्रव्यं हृतमिति ज्ञात्वा हा हतोऽस्मी-त्युच्चैराक्रोशत् पुनरपि स्वमठं न्यवर्तत ।

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥

---

टीपा

स्नानार्थम्—स्नानाकरिता, भोजनार्थम्—जेवणाकरिता, हे सामासिक शब्द क्रियाविशेषणाप्रमाणें [illegible] 'स्नानाकरिता' असा अर्थ [illegible] अर्थ [illegible]

'हा हतोऽस्मि'—[illegible] हे उद्गारवाचक वाक्य आहे.

अभ्यास

१. खालील पाच वाक्यें संधि सोडवून लिहा —

२. विग्रह करा—[illegible], उपदेशग्रहणम्, ग्रामान्तरम्, कक्षान्तरम्, वृक्षमूलम्, [illegible], [illegible], ज्ञानमार्ग, स्नानानन्तरम् ।

३ दिलेल्या वाक्यांशसमूहांतून योग्य वाक्यार्ध जोडून वाक्यें तयार करा —

| | |
|---|---|
| बहवो जनाः | अप्रीणयत् मुनिं स्वनिष्ठया । |
| यतिः तस्य अवस्थानम् | कथामध्ये स्थापितम् । |
| आषाढमासे | अनुग्रहाय आगच्छन् तस्य आश्रमम् । |
| यतिना स्वद्रव्य | अन्वमन्यत । |
| स शिष्यः | मध्याह्ने स्नाति । |
| यतेः स्नानसमये | द्रव्यम् अपाहरत् । |

---

## २०—जामातृसम्भावना ।

अस्ति धरापीठे विकण्टकं नाम पुरम् । तत्र महाधनो नाम भाण्डपतिर्न्यवसत् । तस्य चत्वारो जामातरोऽवन्तीनगर्यामवसन् । एकदा पर्जन्याभावात्सर्वत्र दुर्भिक्षमभवत् । भोजनमपि दुर्लभं जातं तेषाम् । अतस्ते श्वशुरगृहं विकण्टकनगरे समप्राप्ताः । 'जामाता दशमो ग्रहः' इति ज्ञात्वा स तेषु सबहुमानं व्यवाहरत् । तेभ्य उत्तमानि वस्त्राणि भोजनं च प्रायच्छत् । एवं ते तत्र सुखेन षण्मासानवसन् । यदा महाधनस्तान् गमनोत्सुकान्नापश्यत्तदा स स्वभार्यामवदत् । एते जामातरः स्वगृहं प्रति निवर्तनमपि न चिन्तयन्ति । अपमानं विना ते गमनोत्सुका न भवन्तीत्यहं मन्ये । अतोऽद्य भोजनवेलायां पादप्रक्षालनार्थं जलमपि न दातव्यं यथा तेऽपमानेन क्रुद्धा भूत्वा निर्गच्छेयुरिति । एवं गर्गः पादप्रक्षालनापमानात् सोमो लघ्वासनदानाद्दत्तः क्षुद्रभोजनाच्च निर्गताः । किन्तु चतुर्थः श्यामलः स्वयमेव नागच्छत् । अतः स बलान्निःसारितो गृहाद्बहिरर्धचन्द्रप्रदानेन ।

गर्गो हि पादशौचाल्लघ्वासनदानतो गतः सोमः ।<br>
दत्तः कदशनभोज्याच्छ्यामलकश्चार्धचन्द्रेण ॥

---

### टीपा

'न दातव्यम्—दिलें जाऊ नये' कर्मणि विध्यर्थी धातुसाधित विशेषण
'सबहुमानम्'—मोठ्या मानानें—'बहुमानेन सह' सह या अर्थी नामापूर्वी स जोडून झालेला हा सहबहुव्रीहि समास अव्ययासारखा योजलेला आहे

### अभ्यास

१ योग्य क्रमानें पुढील वाक्यें लिहा —(१) षण्मासादनन्तरमपि ते गमनं नाचिन्तयन् । (२) विकण्टके महाधनो नाम भाण्डपतिर्निवसति स्म । (३) तेभ्य पुस्तकानि मिष्टान्न चायच्छत् स । (४) तस्य जामातरोऽवन्तीनगराद्विकण्टकं प्राप्ता । महाधनोऽन्ते तान् विविधं प्रकारैरनादरमदर्शयत् । (५) चतुर्थोऽर्धचन्द्रप्रदानेन निःसारित । (६) तेषु स आदरेण व्यवाहरत् । (७) तेषां त्रयो गता: ।

२ शेवटील पाच वाक्यें सन्धि सोडवून लिहा.

३ योग्य शब्द योजा—प्रजा ——— सबहुमानं व्यवहरन्ति । पुत्र ——— सादरं वर्तते । शिष्या ——— सविनयं वर्तन्ते ।

४ योग्य शब्द योजा —सायंकाले बाला ——— उत्सुका दृश्यन्ते । जामातर ——— उत्सुका न आसन् । प्रजा नृपस्य ——— उत्सुका सन्ति ।

५ पुढील समासांतील पदें सांगून त्यांचा समास स्पष्ट करा —पादप्रक्षालनापमान:, रथ्यासनदानम्, क्षुद्रभोजनम् ।

---

## २१—विचित्रो दैवयोगः ।

शालीपुरे भिक्षापतिर्नाम दरिद्रो ब्राह्मणः । स भिक्षयैवान्नमलभत । अतो ग्रामाद्ग्रामं सोऽभ्रमत् । एकदा दीर्घमन्तरं गत्वा श्रान्तः स कस्यचिद्देवायतनस्य समीपे वृक्षतलेऽस्वपत् । अनन्तरं प्रबुद्धो भूत्वा यदा स गन्तुं प्रवृत्तस्तदा देवालयाधिपतिस्तमपृ-

च्छत् । कस्त्वं कुत्र च गच्छस्यधुनेति । निर्धनोऽहं भिक्षार्थमितस्ततः सञ्चरामीत्यवदत्स भिक्षापतिः । तदा स देवालयाधिपः पुनस्तमवदत् । शृणु रे भद्र । अहं तुभ्यमन्नं वस्त्रं च प्रयच्छामि । अत्रैव स्थित्वा क्रियतां मम साहाय्यं देवपूजायां देवालयरक्षणे चेति । हर्षनिर्भरः स भिक्षापतिस्तथेत्युक्त्वा तत्र स्थितः । स दिवा देवालयाधिपस्य साहाय्यमकरोद्रात्रौ च द्वारस्य समीप एवास्वपत् । एकदा मध्यरात्रादनन्तरं प्रातः कोऽपि चोरो देवालङ्कारानपहर्तुम् । यावत्स देवालयं प्रविष्टस्तावदेव कश्चिद्वृश्चिकस्तमदशत् । अतः स दुःखेनाक्रन्दत् । तस्य क्रन्दनं श्रुत्वा निद्रितो भिक्षापतिः प्रबुद्धो भूत्वा दीपं च गृहीत्वा तस्य समीपमगच्छत् । क्रन्दनकारणं ज्ञात्वा स पीडापरिहारमकरोदौषधप्रयोगेण । यदा स दंशपीडया मुक्तोऽभवत्तदानेनातर्कितेन दैवदण्डेन भिक्षापतेः सौजन्येन च स भृशं लज्जितोऽभवत् । अतःप्रभृति न जीवाम्यहमनेन पापमार्गेणेति सशपथमुक्त्वैवमुक्त्वा सहसैव निर्गतः स चोरः । भिक्षापतिस्तु विस्मितस्तत्रैव स्थितः ।

---

## टीपा

'**मम साहाय्यं क्रियताम्**'—'मला मदत कर' ह्यांत मदत करावयाची त्या अर्थाच्या शब्दाची षष्ठी विभक्ति योजतात

'**जीवामि-जीवयात्रां करोमि**'—ज्या मार्गाने उदरनिर्वाह करावयाचा त्या अर्थाच्या शब्दाची तृतीया विभक्ति योजतात

## अभ्यास

१ भिक्षापतिः पुनरस्वपत् । कस्तस्य साहाय्यमकरोत् । क आगतो रात्रावेकदा । कथं स दण्डितो दैवेन । कः परिणामो वृश्चिकदंशस्य ।

२ पुढील मू॰ का॰ धा॰ वि॰ वरील गोष्टीत योग्य ठिकाणी योजा —दष्ट, सुप्त, वृष्ट, दृष्ट, क्रन्दित

३ पुढील समासांचा विग्रह करून नावें सांगा —देवपूजा । हर्षनिर्भर । देवालयद्वारा । क्रन्दनकारणम् । सशपथम् ।

४ योग्य शब्द योजा —

| | | | | | |
|---|---|---|---|---|---|
| यथा भिक्षुक | भिक्षया | जीवति | जीवयात्रां | करोति वा | |
| तथा चोर | ——— | ,, | ,, | ,, | । |
| ,, धीवर (कोळी) | ——— | ,, | ,, | ,, | । |
| ,, व्याध (पारधी) | ——— | ,, | ,, | ,, | । |

---

## २२–गन्तव्यं सह मित्रेण ।

सुवर्णपुरे नाम नगरे ब्रह्मदत्तो नाम ब्राह्मणः प्रतिवसति स्म । स च प्रयोजनवशात् ग्रामान्तरं गन्तुं प्रवृत्तः । तदा मात्रा स उपदिष्टः । वत्स अपि त्वमेक एव व्रजसि । नैतद्युक्तम् । मार्गे सहाय आवश्यकः । अतोऽन्विष्यतां कश्चित्सहाय इति । सोऽवदत् । अम्ब अलं भयेन । निरुपद्रवोऽयं मार्ग इति । अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थाया वाप्याः कर्कटमादाय मात्रा स कथितः । यदि तव गमनमावश्यकं तर्ह्ययं कर्कटस्तव सहायो भवत्विति । सोऽपि मातुर्वचनादुभाभ्यां पाणिभ्यां तं सङ्गृह्य कर्पूरपुटिकामध्ये स्थापयित्वा पात्रमध्ये च निक्षिप्य शीघ्रं प्रस्थितः । सूर्यस्यातपेन सन्तप्तः स मार्गे पार्श्वस्थस्य वृक्षस्य छायायां सुप्तः । अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः । सर्पस्य कर्पूरगन्धः प्रियः । अतः स पात्रस्थितां कर्पूरपुटिकामतिलौल्येन भक्षयितुमारभत किन्तु तत्र स्थितः कर्कटस्तस्य प्राणानपाहरत् । ब्राह्मणः प्रबुद्धो भूत्वा यावदुत्थितस्तावत्कर्पूरपुटिकोपरि हतं कृष्णसर्पमपश्यत् । तद् दृष्ट्वा स व्यचिन्तयत् । भोः सत्यं कथितं मम मात्रा यत्पुरुषस्य प्रवासे सहाय आवश्यक इति ।

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥

### टीपा

'अलम्—पुरे' या अव्ययाचा उपयोग तृतीयान्त नामाबरोबर अथवा त्याच अर्थाच्या धातूच्या त्वान्त रूपाबरोबर करतात. जसें—अलं शङ्कया—अलं शङ्कित्वा

'भद्र—हे भद्र' भद्र म्हणजे भद्र या शब्दाचें संबोधनाचें एकवचन

### अभ्यास

१ यज्ञदत्त किं कर्तुं प्रवृत्त । मातु क उपदेश । कर्कट तस्मै माता किमर्थं दत्त । स तं पुन अस्थापयत् । मार्गमध्ये किं कृतं तेन । क तत्र आगत । किमर्थं कर्पूरपुटिका भक्षयितुम् आरभत स । क तस्य परिणाम ।

२ 'समीपे तिष्ठति—समीपस्थ' याप्रमाणें पुढील सामासिक शब्दांचें स्पष्टीकरण करा —मार्गस्थ, पार्श्वस्थ, वृक्षस्थ, ग्रामस्थ, गृहस्थ ।

३ यथा कर्पूरगन्ध सर्पस्य प्रिय । तथा क्षीरं ——— प्रिया । ——— प्रिय मार्जारस्य । मधु प्रिय । ——— प्रियं कृपणस्य ।

## २३—दिलीपस्य पुत्रप्राप्तिः ।

आसीत्पुरा सूर्यवंशे दिलीपो नाम नृपः । स सर्वगुणैरुपेतस्तथा च सकलशास्त्रनिपुण आसीत् । प्रजापालने स दक्षः । तस्य सुदक्षिणा नामानुरूपा भार्या । सा तस्य प्राणेभ्योऽपि प्रिया । सुत-मुखदर्शनं विना सर्वाण्यन्यानि सुखानि तस्य तुच्छानि । अत सन्तानार्थं कमप्युपायं चिन्तयितुं स सकलं राज्यभारं सचिवेषु निक्षिप्य भार्यया सह कुलगुरोर्वसिष्ठस्याश्रमं गत । मुनिं सादरं प्रणम्य तस्मै स स्वमनोरथं न्यवेदयत् । तदा स ऋषिणैवमुपदिष्ट । त्वया सुरधेनुरवज्ञाता पूर्वजन्मनि । अतस्तस्याः शापादेव त्वं सन्ततिविहीनो जात । ममाश्रमे वर्तते तस्या नन्दिनी नन्दिनी नाम । तामेवाराध्य तव पुत्रप्राप्तिर्भवेदिति ।

दिलीपो भार्यया सह तां नन्दिनीमाराधयत्। सा तस्य भक्त्या सन्तुष्टा किन्तु परीक्षां विना तस्य मनोरथं पूरयितुं नैच्छत्। अतः साऽऽत्मानं मायामयेन सिंहेनाभिभूतमदर्शयत्। एतद् दृष्ट्वा नृपस्तस्य सिंहस्य वधाय सज्जोऽभवत्। तदा स सिंहो मनुजवाचैव तमुपहासेनावदत् केवलं शस्त्रेण त्वं धेनुरक्षणाय नालमिति। तदा नृपोऽवदत्। अहमिमां प्राणैरेव रक्षामि। मां भक्षयित्वा त्वमिमां मोचयेति। अत्रान्तरे मायानिर्मितः सिंहोऽदृश्योऽभवत्। अनेन तस्य दृढनिश्चयेन प्रीता सा धेनुस्तमवदत्। मदीयेन दुग्धपानेन तव मनोरथः सफलो भवेदिति। तदा नृपो भार्यया सह तस्या दुग्धमपिबत्। पश्चाद्गुरुमामन्त्र्य स्वराजधानीं न्यवर्तत। यथाकालं सा सुदक्षिणा गर्भवती भूत्वा सुलक्षणसम्पन्नं पुत्रमजनयत्। दिने दिने वर्धमानः स पुत्रो मातापित्रोः आनन्दस्य परां काष्ठामनयत्।

---

## टीपा

'अलम्—योग्य, लेढाचा' हें अव्यय तुमन्त धातुसाधित अव्ययाबरोबर अथवा चतुर्थ्यन्त नामाबरोबर योजतात.

'यथाकालम्—योग्य वेळी' हा अव्ययीभाव समास आहे.

'पूर्वजन्मनि'—पूर्वीच्या जन्मात जन्मन् या शब्दाचें सप्तमीचें एकवचन.

'आत्मानम्'—स्वतःला आत्मन् या शब्दाचें द्वितीयेचें एकवचन हें रूप एकवचनांत यानंतर आत्मना, आत्मने, आत्मनः, आत्मनः, आत्मनि हीं तृ. ते सप्तमीचीं रूपें.

## अभ्यास

१ वाक्यें पुरी करा—दिलीप सर्वशास्त्रेषु ——— ——— च शूरः।
तेन ——— राज्यभारः ——— निहितः। ——— तेन जन्मान्तरे ———।
अतः स ——— आराधयत्। तस्याः ——— प्राणान् ——— उद्यतः।
तस्य ——— प्रीता सा ——— ——— अपूरयत्। सुदक्षिणा ———
पुत्रम् ———।

२ विग्रह करा —प्रजापालनम्, राज्यभार॰, सन्तानविहीन॰, धेनुरक्षणम्, दृढनिश्चय ।

३ समास योजा:—सिंहेन अभिभूता, सिंहस्य वध , दिने दिने, परा काष्ठा ।

---

## २४–रघो राज्यप्राप्तिः ।

यौवनमापन्नो दिलीपसूनू रघुर्यौवराज्ये पित्राऽभिषिक्तः । पश्चा-द्दिलीप एकोनशततमं क्रतुं प्रारभत । तदा होमतुरङ्गरक्षणे रघुर्नि-युक्तः । किन्तु शक्रेण स तुरगोऽपहृतः । नन्दिनीप्रभावेण तज्ज्ञात्वा रघुर्धीरस्वरेण 'मुच्यतां तुरग' इति शक्रं प्रार्थयत । तदा शतक्रतु-रवदत् । तव पिता ममाभिधानं शतक्रतुं वाञ्छति । नेच्छाम्यह-मात्मन उपपदं त्यक्तुम् । अतस्तस्य मनोरथं निष्फलं कर्तुमेव मया तुरगोऽपहृत इति । एतच्छ्रुत्वा रघुस्तं युद्धायाह्वयत । तदा तयो-स्तुमुलं युद्धमभवत् । रघोर्युद्धकौशलेन प्रीत इन्द्रस्तुरङ्गमादृते त्वं किमिच्छसीति रघुमपृच्छत् । तदा रघुरवदत् । मम पिताशेषं क्रतुफलं लभतामिति । तथेत्युक्त्वा वासवो नभोमार्गेण त्रिदिवं गतः । रघुरप्ययोध्यां निवृत्य स्वपित्रे तत्सर्वं न्यवेदयत् । तदा हर्षभरेणा-भिनन्दितः स पित्रा । एवं एकोनशतं यज्ञान् कृत्वा रघौ च राज्यभारं निवेश्य दिलीपो देव्या सुदक्षिणया सह वनवासाय प्रस्थितः ।

रघुरपि नयेन राज्यं कृत्वा प्रजानुरञ्जनमकरोत् । 'राजा प्रकृति-रञ्जनात्' इति सुभाषितं सार्थतामनयत् । किन्तु पह्लवःशत्रव आत्मना सह योद्धुमुद्यता इति ज्ञात्वा रिपूणां दर्पं शमयितुं दिग्विजयाय स प्रातिष्ठत । क्रमेण सर्वाञ्शत्रून् पराजित्य दिग्विजयं च कृत्वा निवृत्तः स राजधानीम् । पश्चात्तेन विश्वजिन्नाम यज्ञ आरब्धः । तस्मिन्यज्ञे कोषस्थं सर्वं धनं तेन पात्रेभ्यो वितीर्णम् । अन्ते तु वरतन्तुशिष्यः

कौत्सो नाम दक्षिणार्थमागतः । किन्तु नृपस्य कोषागारं धनविहीनं दृष्ट्वा निवर्तितुमैच्छत् । किन्तु रघोस्तन्न सम्मतम् । अतः स धनपतेः कुबेराद्धनं लब्धुं स्वयमेव गन्तुं प्रवृत्तः । यावत्स गमनोद्यतस्तावदेव तस्य कोषगृहे हिरण्मयी वृष्टिरभवत् । तत्सर्वं सुवर्णं स कौत्सायायच्छत् । तदातीव प्रीतेन तेन कौत्सेन स आशीर्वचनेनानुगृहीतः । त्वमात्मगुणानुरूपं पुत्रं लभस्वेति स आशीर्वादः । तदनुसारेण रघोर्भार्या काले पुत्रवती जाता । अज इति स्वपुत्रस्य नाम कृतं रघुणा ।

---

## टीपा

‘आ + ह्वे—आह्वयते—आह्वान करणें’ हा धातु या अर्थी आत्मनेपदी होतो.

‘ऋते—शिवाय’ हें अव्यय पञ्चम्यन्त नामाबरोबर योजतात.

‘वि + सृ—देणें’ हें क्रियापद ज्याला द्यावयाचें त्याची चतुर्थी किंवा सप्तमी योजून योजतात.

## अभ्यास

१ वाक्यें पुरी करा:—रघुः —— यौवराज्ये ——। —— रक्षितः —— इन्द्रेण ——। —— तुरगं —— रघुणा —— कृतम्। रघोः —— प्रीतेन —— दिलीपाय —— दत्तम्। —— राज्यभारः —— निवेशितः।

२ यथा हिरण्मयी वृष्टिः तथा —— घटः, —— अलङ्कारः, —— पञ्जरः, —— मूर्तिः, —— मोदकः।

३ शेवटील १० वाक्यें सन्धि सोडवून लिहा.

४ पुढील शब्द वाक्यांत योजा.—सम्मतः, व्यतरन्, ऋते, न्ययोजयत्, अनुगृहीतः।

---

# २५–रघुपुत्रस्याजस्य विवाहः।

स रघुकुमारोऽजो धैर्येण शौर्येणौदार्येण च पितरमन्वकरोत्। यावत्स यौवनपदवीमारूढस्तावत्क्रथकैशिकानामधिपतिना स्वसुरिन्दुमत्याः स्वयंवर आरब्धः। सस्नुतं रघुं न्यमन्त्रयत स स्वयंवराय। रघुणापि ससैन्योऽजो विदर्भाणां राजधानीं प्रस्थापितः। मार्गे मतङ्गमुनेः शापान्मतङ्गजत्वमापन्नो गन्धर्वस्तेन शापान्मुक्तः। अतः स गन्धर्वस्तस्मै सम्मोहनं नाम समन्त्रमस्त्रमयच्छत्। अस्त्रेण युक्तोऽजोऽपि स्वयंवराय सत्वरं गतः। तत्र क्रथकैशिकस्तं प्रत्युदगच्छत्। स्वयंवरमण्डपे सोऽन्यैर्नृपैः सार्धमासन उपाविशत्। यदा पतिंवरा राजकन्येन्दुमती मण्डपं प्राविशत् तदा तस्या सौन्दर्येण सर्वेषां नृपाणां नयनान्याकृष्टानि। तस्याः सखी सुनन्दा सर्वेषां नृपाणां गुणान् पराक्रमं चावर्णयत् क्रमेण। किन्तु रघुपुत्रस्याजस्य दर्शनेनैव सा प्रीताऽभवत्तस्य च कण्ठे विवाहमालामार्पयत्। विवाहविधेरनन्तरं पित्रा स सिंहासने स्थापितो राज्ये चाभिषिक्तः। स प्रजानां भूतये प्रयायतत। रघुस्तु राज्ये सुप्रतिष्ठितं पुत्रं दृष्ट्वा यदा वनगमनायोद्यतोऽभवत्तदाऽऽत्मनोऽपरित्यागं स प्रार्थयत। अनया प्रार्थनया रघुर्वनं न गतः किन्तु नगराद्बहिरेव विजने स्थले पर्णशालामध्यवसत्कालेन च त्रिदिवमगच्छत्। एवं रघुः पराक्रमेणौदार्येण सुराज्यतन्त्रेण च विख्यात आसीत्। अत एव दिलीपवंशो 'रघुवंश' इति विख्यातोऽभवत्।

---

टीपा

'अनु + कृ – अनुकरण करणें' ज्याचें अनुकरण करावयाचें त्याची द्वितीया किंवा षष्ठी योजतात.

'अधि + वस् – राहणें' याचा उपयोग स्थलवाचक शब्दाची द्वितीया विभक्ति योजून करितात.

### अभ्यास

१ रघुणा कः स्वयंवराय प्रस्थापित । मार्गे किं जातम् । इन्दुमत्या किं कृतम् । सा नृपानवर्णयत् । कस्य वर्णन तस्या प्रियम् । विवाहादनन्तर किमभवत् । रघुवंशनिवासार्थं किं न गत ।

२ सुतेन सहित —ससुत रघु । याप्रमाणे पुढाल समासाचा विग्रह करा — पम"नम् अजम् । ससैन्य रघु । सशाप गन्धर्व ।

३ निदर्भाणा— विदर्भदेशस्य चा । याचप्रमाणे निपधेषु —— या । कलिङ्गान् —— या । यज्ञा —— या ।

४ यावत्-तावत्, यदा-तदा, यदि-तर्हि हीं अव्यये योजून वाक्य तयार करा

---

## पद्यविभागः ।

### १—गणेशः ।

अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ १ ॥

### २—पण्डितप्रशंसा ।

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः ।
तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥
किं कुलेन विशालेन विद्याहीनस्य देहिनः । (नरस्य)
अकुलीनोऽपि विद्यावान् देवैरपि स पूज्यते ॥ २ ॥

---

१ इष्ट वस्तु मिळविण्यासाठी    २ सर्व विघ्नांचा नाश करणाऱ्या

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ३ ॥
विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा ।
विद्याहीनो नरोऽप्राज्ञः सभायां नैव शोभते ॥ ४ ॥

## ३—विद्याप्रशंसा ।

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति । (अवगताय)
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥ १ ॥ (आगच्छति)
हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । (गच्छति)
कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ २ ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ३ ॥
सद्विद्या यदि का चिन्ता वराकोदरपूरणे ।
शुकोऽप्यशनमाप्नोति राम रामेति च ब्रुवन् । ४ ॥ (प्राप्नोति । वदन्)
न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ ५ ॥
मातेव रक्षति पितेव हिते नियुङ्क्ते । (नियोजयति)
कान्तेव चापि रमयत्यपनीय खेदम् ॥
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिम् । (वर्धयति । प्रसारयति । दिशासु)
किं किं न साधयति कल्पलतेव विद्या । ६ ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम् ।
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ॥
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतम् ।
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥ ७ ॥

१ द्रष्टव्यं कथा ३ी

## ४—सामान्यनीतिः ।

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥ १ ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥ २ ॥

उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ ३ ॥

को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ४ ॥

सदयं हृदयं यस्य भाषितं सत्यभूषितम् ।
कायः परहिते यस्य कलिस्तस्य करोति किम् ॥ ५ ॥

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः ।
त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ ६ ॥

गुणान् भूषयते रूपं शीलं भूषयते कुलम् ।
सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ ७ ॥

पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ ८ ॥

विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च ।
व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ ९ ॥

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥ १० ॥

## ५—उदारप्रशंसा ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥

दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि ।
जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ २ ॥

शुष्यन्ते पक्षिणस्तत्र पठन्ति शुकसारिकाः ।
दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ३ ॥

यद्वासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । (यच्छसि । भक्षयसि)
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥ ४ ॥

गौरवं प्राप्यते दानान्न तु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ५ ॥

६—मूर्खवायसः ।

विहरन्ति यदा हंसाः सानन्दं सरसीजले ॥
तत्रागत्य जनाः सर्वे भवन्ति मुदितास्तदा ॥ १ ॥

वृक्षस्थो वायसः कश्चित्तत्प्रापश्यत्तद्दिने दिने ॥
चिन्ताक्रान्त इवासीत्स हंससौभाग्यकारणात् ॥ २ ॥

भवितुं हंसवच्छ्वेत उपायस्तेन चिन्तितः ॥
अत्यजत्पूर्वमित्राणि न्यवसच्च सरस्तटे ॥ ३ ॥

अश्रान्तं क्षालितौ पक्षौ वायसेन च वारिणा ॥
अभवत्पूर्ववच्छ्यामः स्वभावो दुरतिक्रमः ॥ ४ ॥

सन्तोषश्च नरैः कार्यो देवदत्तैर्गुणैः खलु ॥
ईश्वरेच्छामनुसृत्य सुखिताः सन्ति मानवाः ॥ ५ ॥

७—अतिदर्पोऽपाताय ।

सोमवंशोद्भवः कश्चिन्नहुषो नाम भूपतिः ॥
नयेनैवाकरोद्राज्यं रक्षित्वा पुत्रवत्प्रजाः ॥ १ ॥

क्रतूनां च शतं तेन कृतमिन्द्रपदेच्छया ॥
सपद्येव फलं प्राप्तं माहेन्द्रं पदमं महत् ॥ २ ॥

दिव्यैश्वर्योपभोगेन मदान्धः सोऽभवत्तदा ॥
महर्षीनादिशद्दृप्तः शिविका प्रोह्यतामिति ॥ ३ ॥
एतत्तद्वचनं श्रुत्वा विमूढास्ते महर्षयः ॥
अवहञ्छिविकारूढं स्वांसैस्ते नहुषं प्रभुम् ॥ ४ ॥
वामनत्वादगस्त्यस्य कम्पिता शिविकाभवत् ॥
सत्वरं सर्प सर्पेति सक्रोधो नहुषोऽवदत् ॥ ५ ॥
अपमानेन सङ्क्रुद्धोऽगस्त्यस्तमशापदृषिः ॥
न ते युक्तमिदं स्थानं भव सर्पो महीतले ॥ ६ ॥
उक्तमात्रेषु शब्देषु सहसा नहुषस्तदा ॥
प्रभावान्मुनिशापस्य पृथिव्यामपतत्खलु ॥ ७ ॥
मुनयो हि क्षमाशीला यदा गच्छन्ति क्रुद्धताम् ॥
तदानिवार्यस्तत्कोपः सर्वनाशाय कल्पते ॥ ८ ॥

## ८—सुभाषितप्रशंसा ।

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ १ ॥
धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् ।
इत्यादिगुणरत्नानां सङ्ग्रही नावसीदति ॥ २ ॥
संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः सङ्गतिः सुजनैः सह ॥ ३ ॥
द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ ४ ॥
भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ ५ ॥

## ९—सज्जनप्रशंसा ।

यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १ ॥

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ २ ॥

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः ॥ ३ ॥ (गृहात्)

सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ४ ॥ (प्रसारयति)

परदुःखं समाकर्ण्य स्वभावसरलो जनः ।
उपकारासमर्थत्वात्प्राप्नोति हृदये व्यथाम् ॥ ५ ॥

चित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता ।
निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥ ६ ॥

किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ७ ॥

स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसम्पर्कतः पिकाः ॥ ८ ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ९ ॥

साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् ।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ १० ॥

## १०—परोपकारप्रशंसा ।

रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः । ( [illegible] )
एते परोपकाराय युगे देवेन निर्मिताः ॥ १ ॥

आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः।
परं परोपकारार्थं यो जीवति स जीवति ॥ २ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन।
विभाति कायः खलु सज्जनानां परोपकारेण न तु चन्दनेन॥ ३ ॥ (शोभते)

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ ४ ॥ (दुग्ध यच्छन्ति)

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभि· स्वभाव एवैष परोपकारिणाम् ॥ ५ ॥

## ११—उद्योगप्रशंसा।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा. ॥ १ ॥

उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ २ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ३ ॥

न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मन.।
अनुद्यमेन तैलानि तिलेभ्यो नाप्तुमर्हति ॥ ४ ॥

न लभन्ते विनोद्योगं जन्तव. सम्पदां पदम्।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ ५ ॥ (अपिबन्)

## १२—सत्सङ्गमः ।

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् । (धारयति)
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम् ॥ १ ॥
कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः । (शापम्)
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ २ ॥
महाजनस्य संसर्गः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥३॥ (मौक्तिकानां शोभाम्)
जाड्यं धियो हरति सिञ्चति वाचि सत्यम् । (बुद्धेः)
मानोन्नतिं दिशति पापमपाकरोति ॥ (नाशयति)
चेतः प्रसादयति दिक्षु तनोति कीर्तिम् ।
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ ४ ॥ (नराणाम्)

## १३—भूमिगतं धनम् ।

वसति स्म पुरा कश्चित्पण्डितो वृद्धतां गतः ।
स्वपुत्रानलसान्दृष्ट्वा चिन्तातुर इवाभवत् ॥ १ ॥
अथैकस्मिन्दिने पुत्रान्समाहूयावदन्मिथः ।
मन्येऽहं मृत्युकालो मे समीपं वर्ततेऽधुना ॥ २ ॥
श्रूयतां सावधानं च यत्र मे वर्तते धनम् ।
निखातं यत्कुत्रापि द्रव्यं क्षेत्रे सुरक्षितम् ॥ ३ ॥
विस्मृतं मया स्थानं स्मृतिभ्रंशात्सुनिश्चितम् ॥
एवमुक्त्वा वचः कष्टात्पञ्चत्वं पण्डितो गतः ॥ ४ ॥ (वचनम्)
धनलाभेच्छया पुत्रा आखनन्क्षेत्रमुत्सुकाः ।
न दृष्टं तैस्तु कुत्रापि द्रव्यं भूमिगतं तदा ॥ ५ ॥
धान्यं दशगुणं लब्धं यदा क्षेत्रस्य कर्षणात् ॥
अवदंस्ते तदा पुत्रा ज्ञातो हि पितुराशयः ॥ ६ ॥

# शब्दसंग्रह.

## अ

अक्ष —खारा
अकस्मात् (अ )—एकाएकीं
अघम्—पाप
अट (१ प प )—हिंडणें, फिरण
अटवी—अरण्य
अतर्कित (वि )—आकस्मिक
अतीव (अ )—पुष्कळ
अतिलौल्यम्—अतिशय हाव
अथ किम् (अ )—होय तर
अधिष्ठानम्—ठिकाण, शहर
अधि+वस (१ प प )—राहाणें
अध्यापय (अधि+इ चें प्रयोजक)—
शिकविणें
अनध्यायदिनम्—सुटीचा दिवस
अनु+कृ (८ उ प )—अनुकरण करणें
अनु+इष् (४ प प )—शोधणें
अनु+भू (१ प प )—अनुभविणें
अनु+मन् (४ आ प )—संमति देणें
अन्ध (वि )—आंधळा
अन्वेषणम्—शोध
अप+सृ (१ प प )—दूर जाणें
अप+हृ (१ प प )—दूर नेणें
अपा+कृ (८ उ प )—नाश करणें
अभिक्रान्त (भूत वि )—हल्ला केलेला
अभिमत (भूत वि )—आवडता
आवडलला
अभिप्रेत (भूत वि )—इष्ट असलेला
अभिषिच (६ प प )—अभिषेक करणें
अभिधानम्—नांव
अम्बु (न )—पाणी
अम्बुजम्—कमळ
अम्भस (न )—पाणी
अम्भोधि (पु )—समुद्र
अर्क —सूर्य
अर्धचन्द्र —गचांडी
अर्पय (ऋ चें प्रयोजक)—अर्पण करणें
अर्धभग्न (वि )—अर्धवट मोडलेलें
अर्ह (१ प प )—योग्य असणें
अलस (वि )—आळशी
अव+तॄ (१ प प )—उतरणें
अव+सद् (१ ६ प प अवसादति)—
नाशाप्रत जाणें
अव+लम्ब् (१ आ प )—आधार
घणें अवलंबिणें
अवस्थानम्—राहाणें
अशनम्—खाणें
अश्मता—दगडाची स्थिति
अश्रान्तम् (अ )—थकल्याशिवाय
असत् (वि )—वाईट मनुष्य

## आ

आ + क्रुश् (१ प. प.)—आक्रोश करणें, रडणें
आ + चर् (१ प. प.)—आचरणें
आ + दा (१ प. प.)—घेणें
आ + दृ (६ आ. प.)—आदर दाखवणें
आ + नन्द् (१ प. प.)—आनन्दित होणें
आनन्दय (प्रयोजक)—आनन्दित करणें
आ + प्रच्छ (६ आ. प.)—निरोप घेणें
आपणिक—दुकानदार, व्यापारी
आ + राध् (१० प. प.)—संतुष्ट करणें, आराधना करणे
आ + रुह् (१ प. प.)—वर चढणें, वर सरणें
आलय—ठिकाण, स्थान
आ + लम्ब् (१ आ. प.)—आश्रय करणे, आधार घेणें
आशय—हेतु, उद्देश
आ + श्रि (१ उ. प.)—आश्रय घेणें
आहूत (भू. धा. वि.)—बोलावलेला
आ + ह्वे (१ प. प.)—बोलावणें, हाक मारणें
(१ आ. प.)—आव्हान देणें
आ + ह्लाद् (१ आ. प.)—आनन्दित होणें
आह्लादय (प्रयोजक)—आनन्दित करणें

## इ

इतस्ततः (अ.)—इकडे तिकडे
इन्दु (पुं.)—चन्द्र

## उ

उच्च (वि.)—उंच
उच्चैस् (अ.)—उदात्त तऱ्हेनें, मोठ्यानें
उटज—म्—झोपडी, लहानसा आश्रम
उत्तरतः (अ.)—उत्तरेकडे
उद्यानम्—बाग
उदरम्—पोट
उद्यत (वि.)—तयार, सज्ज
उद् + भू (१ प. प.)—उत्पन्न होणें
उद् + पद् (४ आ. प.)— ,,
उद् + स्था (१ प. प.)—उठणें, उभें राहाणें
उद्गमस्थानम्—उगमाचें ठिकाण
उद्यम—उद्योग
उप + आस् (२ आ. प.)—उपासना करणें, पूजा करणें
उप + दिश् (६ उ. प.)—उपदेश करणें
उपपदम्—नाव, पदवी
उपपन्न (भू. वि.)—योग्य
उपरि (अ.)—वर
उपवनम्—बाग
उप + विश् (६ प. प.)—बसणें
उपायनम्—बक्षीस, नजराणा
उपेत (धा. वि.)—युक्त, सम्पन्न
उलूक—घुबड

## ए

एतादृश (वि., स्त्री. °शी)—या सारखा

एकोनशततम (वि स्त्री °मी)— नव्याण्णवावा

## ओ

ओषधि (स्त्री)—वनस्पति, औषध, झाड

## क

कक्षान्तरम्—काखेचा पोकळा
कदशनम्—वाईट अन्न
कन्था—गोधडी, ठिगळ्यांचें वस्त्र
कन्या—मुलगी
कपिल (वि)—पिंगट रंगाचा
कपोत—कबूतर
कर—हात
कर्कट—खेंकडा
कर्पर—खापरा
कर्पूरगुटिका—कापुराची पुडी
कष्टमय—(वि स्त्री °मया)—दुःख कारक
काक—कावळा
काचवत् (अ)—काचेसारखें
कातर (वि)—भित्रा
कान्ता—बायको
काञ्चनम्—सुवर्णम्, सोनें
कापुरुष—क्षुद्र मनुष्य
कामदा (स्त्री)—इच्छा पुरविणारी
काय—देह, शरीरम्
काष्ठा—मर्यादा
किल (अ)—खरोखर
कीट, कीटक—किडा
कुम्भकार, कुलाल—कुम्भार
कुलाय-यम्—घरटें
कुतश्चित् (अ) कोणीकडून तरी
कुक्कुट—कोंबडा
कुसुमम्—फूल
कूटम्—शिखरम्
कृ (८ उ प)—करणें
कृष् (१-६ प प)—ओढणें, नांगरणें
कराल —मराचा भाला
कृष्ण (वि)—काळा
कृषीवल—शेतकरी
कृषिकार्यम्—शेतकी
कोटि (स्त्री)—टोंक, मर्यादा
कोटर-रम्—झाडाची ढोली
कोशागारम्—खजिना
क्रतु (पु)—यज्ञ
क्रमश (अ)—क्रमाने
क्रीड् (१ प प)—खेळणें
क्रुध् (४ प प)—रागावणें
क्रौञ्च—पक्ष्याचें नाव
क्रौर्यम्—क्रूरपणा
क्षल् (१० उ प)—धुणें
क्षतम्—जखम, घाव
क्षारोद—क्षारसमुद्र
क्षुद्र (वि)—हलक्या मनाचा, नीच
क्षेत्रम्—शेत
क्षेमकारक (वि)—रक्षण किंवा हित करणारा

### ख

खगः—पक्षी
खञ्ज (वि.)—लंगडा
खण्डशः कृ (८ उ. प.)—तुकडे करणें

### ग

गजः—हत्ती
गन्धः—सुवास
गानम्—गाणें
गीर्वाणभारती—देवांची भाषा
गुणोत्करः—गुणांचा समुदाय
गृध्र.—गिधाड
ग्रामः—गाव
ग्रामान्तरम्—दुसरा गाव

### घ

घृतम्—तूप
घ्रा (१ प. प.)—हुंगणें, वास घेणें

### च

चटकः (पुं.), चटका (स्त्री.)—एक पक्षी
चतुर् (संख्यावि.)—प्र. चत्वारः—चार
द्वि. चतुरः— ,,
चन्द्रिका—चन्द्रप्रकाश
चरणः—पाय
चर् (१ प. प.)—हिंडणें, फिरणें
चर्व् (१ प. प.)—चावणें, रवंथ करणें
चर्मन् (न.)—चामडें
चिन्त् (१० उ. प.)—विचार करणें, चिन्तन करणें
चित्रित (वि.)—चित्रविचित्र रंगाचा
चुर् (१० उ. प.)—चोरणें
चेतस् (न.)—मनस्, चित्तम्

### छ

छेदः—छेदनम्—तोडणें

### ज

जननी—आई
जम्बुकः—कोल्हा
जाड्यम्—अज्ञान, मंदपणा
जामातृ (पुं.)—जांवई
जीव् (१ प. प.)—जगणें, जिवंत राहणें
जीवयात्रां कृ (८ उ. प.)—आयुष्य घालवणें

### ड

डी (१ आ. प.)—उडणें

### त

तडागः—तलाव, तळे
तटः (पुं.), तटी (स्त्री.), तटम् (न.)—तीर, पृष्ठभाग
तत्र (अ.)—तेथें
तरल (वि.)—हालणारा, अस्थिर
तरङ्गः—लाट
तादृश (वि. स्त्री. °शी)—त्याच्यासारखा

तापस —यति, सन्यासी
तीर्थम्—पवित्र स्थळ
तीक्ष्णांशु (पु)—सूर्य
तुङ्ग (वि)—उच्च
तुरग, तुरङ्ग, तुरङ्गम —घोडा
तुष् (४ प प)—संतुष्ट होणें
तृणम्—गवत
तृणोल्का—गवताचा चूड
त्रिदिवम्—आकाश, स्वर्ग

द

दक्षिण (वि)—उजवा, उदार, कुशल
दण्ड—शिक्षा, काठी
[illegible]—दांत
दश् (१ प प -दशति)—दंश घेणें, चावणें, डसणें
दशगुण (वि)—दसपट
दा (१ प प)—देणें
दाक्ष्यम्—औदार्य, दक्षता
दारक (पु)—मुलगा, दारिका(स्त्री)—मुलगी
दिनम्—दिवस
दिवा (अ)—दिवसा
दिवाकर—सूर्य
दुग्धम्—दूध
दुराग्रह (वि)—[illegible]
दुर्भिक्षम्—दुष्काळ
दुर्जन—वाईट मनुष्य
दुष्पार (वि)—तरण्यास कठीण
दृश् (१ प प)—पाहणें

देवायतनम्—देऊळ
देवालय—देऊळ
द्युति (स्त्री)—तेज
द्वास्थ—द्वारपाळ

ध

धर्म—धर्म, गुण
धाव् (१ प प)—धावणें
धार्मिक—धर्माप्रमाणें वागणारा, साधु
धिक् (अ)—धिक्कार असो
धृ (१० उ प)—धारण करणें
धेनु (स्त्री)—गाय
ध्यै (१ प प)—ध्यान करणें, चिंतन करणें

न

नकुल (पु)—मुंगूस (स्त्री -नकुली)
नम् (१ प प)—नमस्कार करणें
नयनम्, नयन—डोळा
नय, नीति—न्याय
नवाम्बु (न)—नवीन पाणी
नाट्य (नट् चें प्रयोजक)—नाचवणें
नासिका—नाक
निखात (धा वि)—पुरलेलें
निन्द् (१ प प)—निन्दा करणें
निपुणम् (अ)—बारकाईनें
निबिड (वि)—दाट
निपीत (धा वि)—पूर्ण प्यालेला
नि+मन्त्र् (१० आ प)—बोलावणें
निम्न (वि)—सखल

नियुज (१ प प १० उ प )—नेमणें
निर्घृण (वि )—क्रठोर, क्रूर
निर्दम्भता—दंभ न करणें
निर्भर (वि )—भरलेला पूर्ण
नि + वृ (प्रयोजक)—निवारण करणें
नि + वृत् (१ आ प )—परतणे
निवर्तनम्—परत फिरणें
नि सारय (नि + सृ चें प्रयोजक)—घालवून देणें
निस् + पद (प्रयोजक—घडवून आणणें
नि सारणम्—घालवून देणें
नि + सद् (१ आ प )—आश्रय करणे
नीड —म्—घरटें
नूनम् (अ )—खरोखर
नृत् (४ प प )—नाचणे
नौका—होडी

प

पञ्चत्व गम्—मरणें
पञ्जर —पिंजरा
पथिक पान्थ —वाटसरू
पर्णम्—पान
पर्णशाला—खोपडा
पत्रम्—पान
पयोद —मेघ
पयोधि (पु )—समुद्र
पवन —वारा
परा + अय् (१ आ प पलायते )—पळून जाणे
परि + भ्रम् (१ ४ प प )—वाटेलें फिरणें
परि + वृत् (१ आ प )—फेरा घालणें
,, (प्रयोजक)—वाटेलें फिरवणें
परोक्षम् (अ )—पाठीमागें
पश्चात् (अ )—नंतर,
पा (१ प प )—पिणें
पाणि (पु )—हात
पादप —वृक्ष
पार —म्—दुसरी बाजू
पालय (पा २ प प चें प्रयोजक)—पाळणें रक्षण करणें
पाषाण —दगड
पिच्छ —मोर
पिण्ड —भाताचा गोळा
पितृ (पु )—बाप
पिच्छम्—पिसारा
पीड् (१० उ प )—पीडा देणे
पुष्पम्—फूल
पुरत (अ )—पुढें
पुष् (४ प प )—पोसणे
पूर (१० प प )—पुरें करणे भरणें
पूर्वम्, प्राक् (अ )—पूर्वी
पृष्ठम्—पाठ पृष्ठभाग
प्रकृति (स्त्री )—मूळ स्वभाव प्रजा
प्र + क्षिप् (६ उ प )—फेंकणें
प्रच्छ् (६ प प )—विचारणें
प्रतिपत्ति (स्त्री )—सन्मान

प्रच्छन्न (वि)—लपलेला
प्रतिवचनम्—उत्तर
प्रति+ईक्ष् (१ आ प)—वाट पाहाणें
प्रति+वद् (१ प प)—उत्तर देणें
प्रत्युद्+गम् (१ प प)—सामोरें जाणें
प्रत्यूह—विघ्न
प्रथ् (१० उ प)—प्रसिद्ध करणें
प्र+नम् (१ प प)—नमस्कार करणें
प्रबुद्ध (धा वि)—जागा झालेला
प्रभूत (वि)—पुष्कळ
प्रवृत्त (धा वि)—चालू असलेला
प्र+शंस् (१ प प)—स्तुति करणें
प्रसारय (प्र+सृ चें प्रयोजक)—पसरवणें
प्र+स्था (१ आ प)—निघणें
प्राज्ञ—शहाणा मनुष्य
प्र+अर्थ् (१० आ प)—प्रार्थना करणें
प्रासाद—राजवाडा
प्री (१० उ प)—संतुष्ट करणें

## ब

बद्ध (धा वि)—बांधलेला
बर्ह—पिसारा
बलात् (अ)—जोरानें
बलीवर्द—बैल
बहिस् (अ)—बाहेर
बहुमूल्य (वि)—फार किमतीचा
बुभुक्षा—भूक

## भ

भक्ष (१० उ प)—खाणें
भक्ष्यार्थम् (अ)—खाण्याकरिता
भल्लूक—अस्वल
भाण्डपति—व्यापारी
भारतवर्षम्—भरतखण्ड
भारतवर्षीय—हिंदुस्थानांतील मनुष्य
भार—ओझें
भारती—वाणी, सरस्वती
भार्या—पत्नी
भाष (१ आ प)—बोलणें
भीषण (वि)—भयंकर
भूति (स्त्री)—भरभराट
भूमिभाग—प्रदेश
भ्रम् (१-४ प प)—फिरणें

## म

मञ्जु (वि)—मधुर, मंजुळ
मन् (४ आ प)—मानणें, विचार करणें
मन्त्र् (१० आ प)—ठरविणें, सल्ला देणें
मतङ्ग—हत्ती
मन्द (वि)—मंद
मयूर—मोर
मातृ (स्त्री)—आई

मारकत (वि)—पाचाचें (स्त्री–मारकती)
मारुत—वारा
मालाकार—माळी
मित्रभाव—मैत्री
मिथ (अ)—एकत्र, गुप्तपणें
मुक्ताफलम्—मोती
मुखम्—तोंड
मुच (६ उ प)—सोडणें
मोचनम्—सुटका
मृग—हरिण, वनांतील पशु
मूर्ख—उदार
मेखला—कमरपट्टा
मौर्ख्यम्—मूर्खपणा
मौक्तिकम्—मोती
मौनित्वम्—स्तब्धपणा, मुकेपणा

य

यति (पु)—मुनि
यथार्थेन (अ)—बरोबर
याच् (१ आ प)—मागणें याचना करणें
याचक—भिक्षुक
यात्रिक—यात्रा करणारा
यौवनपदवी—तारुण्याची अवस्था

र

रक्ष (१ प प)—रक्षण करणें
रच् (१० उ प)—रचना करणें बांधणें
रजस (न)—धूळि
रत्ननामा—रत्न हें नाव
रथ्या—रस्ता
रव—आवाज
राज्यवहनम्—राज्यकारभार
रिपु (पु)—शत्रु
रुच (१ आ प)—आवडणें
रुतम्—आवाज
रुधिरम्—रक्त
रुह् (१ प प)—वाढणें

ल

लक्षणम्—चिन्ह
लग्न (धा वि)—लागलेलें चिकटलेलें
लता—वेल
लभ् (१ आ प)—मिळणें
ललाटम्—कपाळ
लाङ्गूलम्—शेपूट
लिख् (६ प प)—लिहिणें
लिप्त (धा वि)—लेप दिलेला, सारवलेला
लम्पट (वि)—चैनी

व

वद् (१ प प)—बोलणें
वन्य (वि)—रानटी
वयस्य—सोबती
वराक (वि)—गरीब
वर्ण् (१० उ प)—वर्णन करणें
वर्ण—रंग

वर्षाकाल —पावसाळा
वस् (१ प. प.)—राहाणें
वह् (१ प प.)—वाचवून नेणें, वाहाणें
वाग्देवी—सरस्वती
वाञ्छ् (१ प. प.)—इच्छा करणें
वाम (वि.)—डावा
वामनत्वम्—खुजेपणा
वायस —कावळा
वारि (न.)—पाणी
वार्धि -वारिधि (पु.)—समुद्र
विकसित (धा. वि.)—फुललेला
विक्षोभ —खळबळ
विकार, विकृति (स्त्री.)—विक्रिया, बदल
विघ्नच्छिद् (पु.)—विघ्ननाशक
विज्वर (वि.)—वार्धक्य नसलेला, तरुण
विजन (वि.)—निर्जन
वितत (धा. वि.)—पसरलेला, रुंद
वि+सृ (१ प. प.)—देणें, सोपविणें
वि+धा (कर्मणि)—करणें
विपणि (पु.)—दुकान, बाजार
वि+लोक् (१० उ. प.)—पाहाणें
विरक्त (वि.)—संसाराला कटाळलेला
विरोपित (वि.)—तयार केलेला
विविक्त (वि.)—गुप्त, निर्जन
विविध (वि.)—निरनिराळ्या प्रकारचा
विशिष् (कर्मणि)—श्रेष्ठ असणें
वि+हृ (१ प. प.)—विहार करणें, खेळणें
वृत् (१ आ. प.)—असणें, वागणें
वृश्चिक —विंचू
वृषभ —बैल
वृध् (१ आ. प.)—वाढणें
वेला—मर्यादा, भरती
वैभवम्—ऐश्वर्य
व्यथ् (४ प. प.)—टोचणें, खुपसणें
व्याध —पारधी
व्याघ्र —वाघ
व्यव+हृ (१ प. प.)—वागणें
व्ययत (अ.)—व्यवसामुळ
व्यजनम्—पंखा
व्या+पद् (४ आ. प.)—मरणें (प्र. व्यापादयति)—ठार मारणें
व्रीहिसार —तांदुळाचें ओसें

श

शकट —गाडी
शयनम्—बिछाना
शय्या— "
शर्करा—साखर
शाखा—फांदी
शासनम्—हुकुम
शिबिका—पालखी
शिवालय —शंकराचें देऊळ
शिशिर (वि.)—थंड
शीर्षम्—डोकें
शुक —पोपट
शुच् (१ प. प.)—शोक करणें
शृङ्गम्—शिंग, शिखर

शोभन (वि )—चांगला
श्येन —बहिरी ससाणा
श्रान्त (धा वि )—थकलेला
श्रु (५ प प )—ऐकणें
श्रुतम्—ज्ञान, विद्या

स

सं+हृ (१ प प )—संहार करणें
सचिव —प्रधान
सकल (वि )—सर्व पूर्ण
संसर्ग —संगति
सम्+चर् (१ प प )—फिरणें
सत्त्व -त्वम्—प्राणी
संप्रभा—चांगला प्रकाश
सद्यस् (अ )—झटकन्
सन्तानम्—संतति
सन्नद्ध (धा वि )—तयार
सपदि (अ )—झटकन
समीपम्-पे (अ )—जवळ
सम्प्राप्त (धा वि )—आलेला, घडलेला
सम्पर्क —संगति
सम्पन्न (धा वि )—युक्त
सरसी—तळें सरोवर
सविशेषम् (अ )—विशिष्ट तऱ्हेनें
सहाय —मदतनीस
सारिका—मैना, साळुंकी
सार्थता—अर्थपूर्णता
सारमेय —कुत्रा
सावधानम् (अ )—लक्ष देऊन
सिकता—वाळू
सिच् (६ प प.)—शिंपडणें
सिद्धि (स्त्री )—जय, यश
सुधा—अमृत
सुप्त (धा वि )—झोपलेला
सुभाग्यम्-सौभाग्यम्—चांगलें दैव
सुत —मुलगा
सुमनस् (स्त्री )—फूल
सृज् (६ प प )—उत्पन्न करणे
सौजन्यम्—चांगुलपणा
सौरभम्—सुवास
स्तेन —चोर
स्था (१ प प )—उभे राहाणें
स्थापय (स्थाच प्रयोजक)—ठेवणें
स्रु (१ प प )—स्रवणें, पाझरणे, झिरपणे
स्वप् (२ प प )—झोपणे
स्वसृ (स्त्री )—बहीण
स्वर्धेनु (स्त्री )—कामधेनु
स्वयमेव (अ )—स्वतःच
स्वैरम् (अ )—यथेच्छम् [illegible]

ह

हरित (वि )—हिरवा
हरिणाजिनम्—हरिणाचें कातडें
हलम्—नांगर
हस्त —हात
हा हतोऽस्मि—अरेरे माझा घात झाला
हिमम्—बर्फ
हिरण्मय (वि स्त्री °यी)—सोन्याचा

# भाग तिसरा—मराठी उतारे

## मराठीचें संस्कृत भाषान्तर

### ( भाषान्तराकरितां सूचना )

१ सूर्य आकाशांत प्रकाशतो—**सूर्यः आकाशे प्रकाशते ।**
सूर्योदयाचे वेळीं मनुष्यें कामाला आरंभ करितात—**सूर्योदये जनाः कार्यम् आरभन्ते ।**

वरील मराठी वाक्याच्या संस्कृत भाषान्तरावरून असें दिसून येईल कीं, वाक्यातील कर्तृपदवाचक शब्दाची प्रथमा विभक्ति योजतात व कर्मपद-वाचक शब्दाची द्वितीया विभक्ति योजतात, आणि क्रियापदाचें रूप जरूर त्या काळाचें पुरुष व वचन यामध्यें कर्तृपदाप्रमाणें असावें लागतें. वाक्यातील इतर शब्द त्याच्या वाक्यातील उपयोगाला व अर्थाला अनुसरून योग्य त्या विभक्तींत योजावे लागतात. जसें सूर्योदयाचे वेळीं या कालवाचक शब्दाचें भाषान्तर '**सूर्योदये**' या सप्तम्यन्त पदानें केलेलें आहे. 'चन्द्र सूर्यापासून प्रकाश मिळवितो' या वाक्याचें भाषान्तर '**चन्द्रः सूर्यात् प्रकाशं लभते**' असें होतें. 'मी पाण्यानें हात व पाय धुतो' या वाक्याचें भाषान्तर '**अहं जलेन हस्तौ पादौ च क्षालयामि**' असें केलें जातें. अशा रीतीनें प्रथम कर्तृपद व त्याचीं विशेषणें, नंतर कर्मपद व त्याचीं विशेषणें आणि शेवटीं क्रियापद व क्रियाविशेषणें योजून मराठीप्रमाणेंच सामान्यतः संस्कृतमध्यें साध्या वाक्यांची रचना करावी.

विशेषणाचीं रूपें विशेष्याप्रमाणें लिंग, विभक्ति व वचन यामध्यें केलीं जातात.

त्याचप्रमाणें काहीं विशिष्ट क्रियापदें व अव्ययें यांच्या उपयोगासंबंधीं पुस्तकांत ठिकठिकाणीं दिलेल्या टीपांप्रमाणें वाक्यरचना करावी.

२ मुलगा अध्ययनाला प्रारंभ करतो—बालः अध्ययनम् आरभते ।
मुनि दुर्जनाचा त्याग करतो—मुनिः दुर्जनं त्यजति ।
भक्त ईश्वराची पूजा करतो—भक्तः ईश्वरं पूजयति ।
मुलगा वडिलांची सेवा करतो—पुत्रः जनकं सेवते ।

वरील मराठी वाक्यांतील अधोरेखित शब्दांचें भाषान्तर एकाच सकर्मक क्रियापदवाचक शब्दानें केलेलें आहे, व म्हणून त्यांच्याशीं संबंध असणाऱ्या नामाचें भाषान्तर द्वितीयान्त कर्मपदानें केलेलें आहे.

३ मनुष्य प्रयत्न करतो—नरः प्रयतते ।
हत्ती पाण्यात क्रीडा करतो—जले गजः क्रीडति ।

वरील वाक्यातहि अधोरेखित शब्दांचें संस्कृत भाषान्तर एकेका अकर्मक क्रियापदानें केलेलें आहे. परन्तु अशीं क्रियापदें संस्कृतमध्यें फार थोडीं आहेत.

४ चन्द्र प्रकाशतो—प्रकाशत आहे—प्रकाशत असतो—या सर्व क्रियापदांचें भाषान्तर 'प्रकाशते' या एका साध्या वर्तमानकाळी रूपानें केलें जातें.
श्रीमान् मनुष्य राहिला—राहात असे—राहात होता—या सर्व क्रियापदांचें भाषान्तर 'अवसत् किंवा वसति स्म' असें केलें जातें. ( वर्तमानकाळी रूपाबरोबर स्म हें अव्यय योजलें असता भूतकाळी अर्थ होतो. )

५ झाडें वाकलीं होतीं—वृक्षाः अवनताः आसन् ।
वेली शोभत होत्या—लताः शोभिताः अभवन् ।
जमीन आच्छादिलेली होती—भूमिः आच्छादिता आसीत् ।

वरील वाक्यातील संयुक्त क्रियापदांचें भाषान्तर भूतकालवाचक धातुसाधित विशेषणें व अस् हें क्रियापद योजून करतात.

६ मी शाळेत जाऊं का—अपि अहं पाठशालां गच्छानि ।
आम्हाला सोबत्यांबरोबर खेळूं द्या—वयं वयस्यैः सह क्रीडाम ।
त्याला विजय मिळो—सः विजयताम्—विजयं लभताम् ।

तो घरीं जाके दे—**सः गृहं गच्छतु ।**

त्याना येथें बसू द्या—**ते अत्र उपविशन्तु ।**

वरील दहेच्या वाक्यांमध्यें प्रथमपुरुषी व तृतीयपुरुषी कर्तृपदावरोबर आज्ञार्थी रूपें योजण्याचा प्रघात आहे

७ मुलानो तुम्ही श्लोक पाठ करा—**बालाः यूयं श्लोकं पठत ।**

,, तुम्ही पाणी प्या— ,, ,, **जलं पिबत ।**

राजा तुला विजय मिळो—**हे भूपते विजयं लभस्व ।**

द्वितीयपुरुषी कर्तृपदावरोबर आज्ञा, उपदेश व आशीर्वाद दर्शविण्याकरिता आज्ञार्थी रूपें योजतात

८ मुलानीं शाळेंत जावें—**बालाः पाठशालां गच्छेयुः ।**

मनुष्यानीं ईश्वराचें स्मरण करावें—**मनुजाः ईश्वरं स्मरेयुः ।**

जर तो माझेकडे येईल तर मी त्याला मदत करीन—**यदि सः मम गृहम् आगच्छेत् तर्हि अहं तस्य साहाय्यं कुर्याम् ।**

वरील वाक्यातील पहिल्या दोन वाक्यातील मराठी विध्यर्थी क्रियापदाचें भाषान्तर संस्कृत विध्यर्थी क्रियापदानीं केलेलें आहे व एकमेकावर अवलंबून असणाऱ्या भविष्यकालीन वाक्यामध्यें विध्यर्थी रूपें योजलेलीं आहेत

९ 'मुलानें आंबा खाल्ला' या मराठी कर्मणि प्रयोगातील वाक्याचें भाषान्तर संस्कृतमध्यें कर्तरि किंवा कर्मणि दोन्ही प्रयोगात करता येतें. जसें—

**बालः आम्रम् अभक्षयत्—बालेन आम्रम् भक्षितम् ।**

रामानें रावणाला मारिलें या मराठी सकर्मक भावे प्रयोगाचें भाषान्तर संस्कृतमध्यें कर्तरि व कर्मणि या दोन्ही प्रयोगात करता येतें जसें—**रामः रावणम् अमारयत्—रामेण रावणः मारितः ।**

१० दोन अथवा अधिक साधी वाक्यें जोडतांना योग्य त्या अव्ययांचा उपयोग केला पाहिजे **च, वा, इति, किन्तु—परन्तु—परम्—तु, यतः—हि, अतः**, या उभयान्वयी अव्ययांचा उपयोग योग्य नियमानुसार केला पाहिजे. ज्यादा माहितीकरितां पाठ ९ व संस्कृत-वाक्यरचना पाठ ४, ५, २४ व २५ पहा.

---

सुख अनुभवतात वर दुःखें गरीबांना त्रास देतात. येथील लोक निरनिराळे धर्म अनुसरतात. येथें विस्तीर्ण व रम्य बागा आहेत. तेथे सकाळ व संध्याकाळीं लोक जातात व इकडे तिकडे फिरतात. या बागामध्यें शुद्ध व थंड वारा वाहतो व तो लोकांचीं मनें आनन्दित करतो. तसेंच समुद्राच्या तीरावरहि लोक सध्याकाळीं जातात. ते वाळूंत बसतात अथवा तीरावर फिरतात. मुलें वाळूंत खेळतात किंवा पाण्यातून चालतात. येथें निरनिराळीं वाहनें आहेत. शहराच्या एका भागातून दुसऱ्या भागात लोक वाहनानीं जातात येथें सर्व लोक कामात गढलेले असतात

७

वाराणसी नगरींत महाधन नावाचा श्रीमान् मनुष्य राहात होता. तो एकदा रात्रीं घरीं नव्हता तेव्हा त्याचे घरात दोन चोर शिरले. त्यानीं सर्वत्र द्रव्य शोधलें तेव्हा त्याना द्रव्याची पेटी सापडली. त्यानीं ती उचलली व ते बाहेर गेले. इतक्यात घराच्या दाराशीं बसलेला कुत्रा मोठ्यानें भुंकूं लागला. त्याच्या भुंकण्यानें निजलेले नोकर जागे झाले व त्यानीं त्या चोरांचा पाठलाग केला. तेव्हा ते चोर त्याच्याशीं लढले. परंतु त्या नोकरानीं त्याना काठ्यानीं मारलें व त्याना पकडलें. अशा रीतीनें त्या श्रीमन्त मनुष्याला त्याचें द्रव्य परत मिळालें पुढें त्या चोराना न्यायाधीशानें शिक्षा केली. महाधनाला फार आनंद झाला व त्यानें आपल्या नोकराना बक्षीस दिलें

८

बाण कवि हा एका गरीब पण्डिताचा मुलगा होता तो फार हुषार होता व सर्व विषयामध्ये प्रवीण झाला. सर्व लोक त्याला वाखाणीत, परंतु त्याचे वडील त्याची स्तुति करीत नसत. यामुळें बाणाला दुःख होई. एकदा तो वडिलांवर फारच रागावला व वडिलांच्या बिछान्याशेजारीं तरवार घेऊन लपून बसला. तेव्हां त्यानें वडिलांचें व आईचें भाषण ऐकिलें वडील म्हणाले, 'माझा मुलगा फार हुषार आहे हें मी जाणतों. परंतु तो गर्विष्ठ होऊं नये म्हणून मी स्वतः त्याची स्तुति करीत नाहीं. मला त्याच्या हुषारीबद्दल अतिशय आनंद होतो.' हें वडिलांचें बोलणें बाणानें ऐकिलें व एकदम तो वडिलांच्या पाया पडला व

आपल्या अविचाराबद्दल त्यानें त्यांची क्षमा मागितली. तेव्हां त्यांनीं त्याला क्षमा केली व ते म्हणाले, ' अविचारानें कोणतीहि गोष्ट करूं नये, कारण अविचार हा सर्व दुःखाचें मूळ आहे. '

९

ध्रुव हा उत्तानपाद नावाच्या राजाचा मुलगा. त्याच्या आईचें नाव सुनीति. त्या राजाची सुरुचि नावाची दुसरी आवडती बायको होती. तिच्या मुलाचें नाव उत्तम होतें. तिला ध्रुव आवडत नसे. एकदा तो आपल्या बापाच्या मांडीवर बसला होता. तेथें सुरुचि आली, व तिनें त्याला राजाच्या मांडीवरून ओढला. तेव्हां ध्रुव दुःखी झाला व आईजवळ गेला. तो आईला म्हणाला ' मी नारायणाची भक्ति करतो व अचल पद मिळवितो ' एके दिवशीं ध्रुवानें घर सोडलें व तो रानात गेला. त्याला नारद मुनि भेटले व त्यांनी त्याला उपदेश केला. तेव्हां ध्रुवानें ईश्वराचें ध्यान केलें. नंतर स्वतः नारायण त्याचे पुढें उभे राहिले व म्हणाले ' ध्रुवा, ऊठ व घरीं जा आणि मातापित्यांना आनंदित कर. मी तुझ्या भक्तीनें संतुष्ट झालों. ' त्याप्रमाणें ध्रुव परत आईबापाकडे गेला. उत्तानपादानें वृद्धपणीं राज्याचा भार ध्रुवावर सोंपविला आणि आपण अरण्यात गेला. ध्रुवानें पुष्कळ वर्षे राज्य केलें व शेवटीं स्वर्गात अटळ स्थान मिळविलें.

१०

मौर्य कुळात चन्द्रगुप्त नांवाचा प्रख्यात राजा होऊन गेला. अशोक हा त्याचा नातू. अशोक गुरुजींपासून निरनिराळे विषय शिकला व त्यात तो पारंगत झाला. पुढें अशोकानें तक्षशिला नगरी जिंकली. त्याच्या वडिलांच्या मृत्यूनंतर मुख्य प्रधानानें त्याला सिंहासनावर बसविलें. अशोकाच्या राज्यात विद्यालयें स्थापलीं गेलीं. त्याला धनुर्विद्येचा नाद होता. त्यानें कलिंग देशाच्या राजाचा पराजय केला. त्या युद्धांत असंख्य लोक मारले गेले. त्यामुळें त्याचे मनात विरक्ति उत्पन्न झाली. त्यानें बौद्धधर्म अनुसरला. त्याच्या राज्यांत बौद्धधर्मांची फार वाढ झाली.

११

एकदां गुरुजींबरोबर पुष्कळ विद्यार्थी गावाच्या बाहेर बागेंत गेले. बागेंत

पुष्कळ झाडें होतीं. ता झाडें फळांच्या माराने वाकलीं होतीं. वेलीं सुवासिक फुलांनी शोभत होत्या. जमीन हिरव्या गवताने आच्छादिलेली होती. तेथें ते सगळे इकडे तिकडे हिंडले. नंतर ते विद्यार्थी थकले व त्यांना भूक लागली. तेव्हा गुरुजींनी माळ्याला बोलाविलें व सांगितलें 'हे मुलगे फार भुकेलेले आहेत. यांना खावयास पिकलेलीं फळें दे. त्यांची किंमत मी तुला देतों.' माळ्यानें पुष्कळ फळें आणिलीं. तेव्हा गुरुजी विद्यार्थ्यांना म्हणाले, 'मुलांनो, तळ्याच्या काठीं झाडाच्या सावलीत बसा व हीं गोड फळें खा. नंतर तळ्याचें स्वच्छ पाणी प्या व विश्रांति घ्या.' त्याप्रमाणें मुलांनीं केलें व नंतर ते सर्व घरीं परतले.

## १२

युधिष्ठिराचें धन व राज्य द्यूतात नष्ट झालें. तेव्हा तो आपले भाऊ व द्रौपदी यासह अरण्यात गेला. तेथें ती सर्व झाडांचीं फळें व मुळें खात असत. युधिष्ठिराला या अवस्थेमुळें दुःख होई. एकदा त्यानें सूर्याची प्रार्थना केली कीं 'हे सूर्या, आमची ही कष्टकारक दशा पाहा व आमच्यावर दया कर, नाहीं तर आम्हाला मरणाशिवाय दुसरी गति नाहीं.' सूर्याचें मन द्रवलें व त्यानें युधिष्ठिराला अन्नानें भरलेली थाळी दिली. त्या थाळींतून पाण्डवांना जरूर तें अन्न मिळत असे. त्यामुळेंच पाण्डवांना वनवासाचें दुःख सहन करतां आलें.

## १३

दशरथ राजाला चार मुलगे होते. त्यांतील राम हा सर्वांत वडील. म्हणून त्यानें रामाला युवराजपदावर बसविण्याची इच्छा केली. हे कैकेयीला आवडलें नाहीं. म्हणून दशरथ राजानें रामाला वनात पाठविलें. सीता व लक्ष्मण त्याचे बरोबर गेली. या दुःखानें दशरथ मरण पावला. त्या वेळीं भरत मामाचे घरीं होता. कैकेयीनें भरताला बोलाविलें व त्याला सिंहासनावर बस म्हणून सांगितलें. तो म्हणाला 'हें सिंहासन रामाचें आहे. मी रामाकडे जातों व त्याला परत आणतों.' त्याप्रमाणें तो अरण्यात रामाकडे गेला. त्यानें येण्याचें कारण रामाला सांगितलें. तेव्हा राम म्हणाला 'माझें परतणें अशक्य आहे. कारण मी वचनानें बांधला गेलों आहें. म्हणून तूं परत जा व राज्य कर.' परंतु भरत

रामाशिवाय परत गेला नाहीं. शेवटीं रामाच्या उपदेशानें तो अयोध्येस परत गेला. त्यानें रामाच्या पादुका सिंहासनावर ठेविल्या व आपण रामाचा प्रतिनिधि या नात्यानें राज्य केलें.

## १४

राम, लक्ष्मण व सीता हीं जनस्थानांत राहात होतीं. तेथें लक्ष्मणानें एक सुंदर झोपडी उभारली. एके दिवशीं एक सुवर्णमृग झोपडीजवळ आला. सीतेनें तो पाहिला व तिला तो आवडला. ती रामास म्हणाली, 'या सुवर्णमृगाला पकडा व माझ्याकडे आणा.' तेव्हां राम लक्ष्मणाला म्हणाला, 'मी यास पकडतों. तू सीतेपासून दूर जाऊं नको.' नंतर सीतेनें एकदम 'लक्ष्मणा, लक्ष्मणा, इकडे जलदीनें ये' असे दीनवाणे शब्द ऐकिले. तेव्हा ती लक्ष्मणाला म्हणाली, 'राम संकटांत आहे. त्याच्या मदतीला जा.' लक्ष्मण म्हणाला, 'मी तुम्हाला सोडून कसा जाऊं? रामाची आज्ञा मी कशी मोडूं? हे रामाचे शब्द नव्हत.' तेव्हां सीता त्याच्यावर रागावली, म्हणून लक्ष्मण निघून गेला. मध्यंतरीं रावण भिक्षुरूपानें तेथें आला व त्यानें सीतेला पळविली.

## १५

वाराणसी नगरींत महाप्रज्ञ नावाचे यति राहात असत. ते सर्व शास्त्रांत प्रवीण होते. त्यांनी एकदा सभेमध्यें उपदेश केला, 'मनुष्यांनीं ईश्वराचें स्मरण करावें व स्थिर चित्तानें ध्यान करावें. ईश्वराची पूजा दररोज करावी, कारण ईश्वराला पूजा फार आवडते, व तो भक्ताचे मनोरथ पूर्ण करतो. मनुष्यानें उद्योग करावा व धन मिळवावें, नशिबावर अवलंबून राहूं नये. आळसानें मनुष्य खालावतो. मनुष्यानें द्रव्याचा हाव धरूं नये, कारण लोभापासून पापें उत्पन्न होतात. पापी मनुष्याला मनानें स्वास्थ्य मिळत नाहीं व तो सदोदित उदास असतो.'

---

# टीपा

१ उदय होणें—**उद् + अय्** (१ आ. प.)। अस्तास जाणें—**अस्तं गम्** (**गच्छति**)। कोवळा—**कोमल** (वि.)। सूर्याची उष्णता—**आतपः**। उन्हाळा—**निदाघः**। काम करूं लागणें—**कार्यम् आ + रभ्** (१ आ प.)। परत येणें—**नि + वृत्** (१ आ. प.)। जेवण करणें—**अन्नं भक्ष्** (१० उ. प.)।

२ रात्री—**रात्रौ**। थड—**शीतल** (वि.)। फिरणें—**भ्रम्** (१ प. प.)। पृथ्वीभोंवतीं—**पृथ्वीं परितः**। क्रमाक्रमानें—**क्रमशः**। वाढणें—**वृध्** (१ आ प.)। कमी होणें—**क्षि** (१ प. प.-क्षयति)। कोर—**कला**। दाट—**निबिड, घन** (वि.)। चन्द्रप्रकाश—**चन्द्रिका, ज्योत्स्ना, कौमुदी**। हिंडणें—**सम् + चर्** (१ प. प.-सञ्चरति)।

३ बिछाना—**शयनम्, शय्या**। उठणें—**उद् + स्था** (१ प. प.-उत्तिष्ठति)। धुणें—**क्षल्** (१० उ. प.-क्षालयति-ते)। दूध—**दुग्धम्**। अभ्यास करणें—**पाठान् पठ्** (१ प. प.), **अध्ययनं कृ** (८ उ. प.)। अंगात कपडे घालणें—**शरीरे वस्त्राणि धृ** (१० उ. प. धारयति-ते)। पुस्तकें घेऊन—**पुस्तकैः सह**। सोबती मला भेटतात—**अहं वयस्यान् पश्यामि—अहं वयस्यैः सङ्गच्छे**। निरनिराळा—**विविध** (वि.)। शिकणें—**पठ्** (१ प. प.), **शिक्ष्** (१ आ. प.)। इकडे तिकडे—**इतस्ततः**। फेंकणें—**अस्** (४ प. प.), **क्षिप्** (६ उ.प.)। थकणें—**श्रम्** (४ प. प.-श्राम्यति)। मी झोंपी जातों—**स्वपिमि अहम्**।

४ ध्यान करणें—**ध्यै** (१ प.प. ध्यायति)। मांडी—**अङ्कः**। डावा—**वाम** (वि.)। धरणें—**ग्रह्** (९ उ. प.), **धृ** (१० उ. प.)। उजवा—**दक्षिण, सव्य** (वि.)। वाजवणें—**वद्** (प्रयोजक-वादयति)। मुकुट—**किरीटः**। चकाकणें—**द्युत्** (१ आ. प. द्योतते)। नेसणें—**धृ**। नाहींसें होणें—**नश्** (४ प. प.)। मोर—**मयूरः**। भक्तांवर उपकार करतो—**भक्तान् उपकरोति**।

५ तलाव—तडागः । जुना—पुरातन (वि) । खोल—गभीर (वि.)। आटणें—शुष् (४ प प)। स्वच्छ—निर्मल (वि)। गोड—मधुर (वि)। त्याचप्रमाणें—तथैव। तलावावरून—तडागस्य उपरि। लाट—तरङ्गः। उमटणें—आविस् भू (आविर्भवति), उद् + पद् (उत्पद्यते)। देखावा—आलोकः, दृश्यम्। काठ—तीरम्। उंच—तुङ्ग, उच्च (वि)। जणु काय तळ्याचे रक्षण-दारच—तडागस्य रक्षकाः इव। वाटसरू—पान्थः, पथिकः। सावली—छाया। पडत नाहींत—न अवतरन्ति, न पतन्ति। शिर—शीर्षम्, अग्रभागः। सहन करणें—सह् (१ आ प)। सन्तुष्ट करणें—प्री (१० उ प प्रीणयति-ते), तोषयति। तांबडें—रक्त (वि.)। पांढरें—श्वेत (वि)।

६ मोठें बेट—विशालं द्वीपम्। सगळीकडे—सर्वत्र। भव्य राजवाडा—उत्तुङ्गः विशालः वा प्रासादः। गरीब—दरिद्रः। झोपडा—उटजम्। धनाढ्य लोक—धनिकाः, धनसम्पन्नाः जनाः। त्रास देणें—पीड् (१० उ प)। निरनिराळ्या—भिन्न (वि)। बाग—उद्यानम्, उपवनम्। वारा—पवनः। वाळूंत—वालुकासु, सिकतासु। चालणें—चर्, चल् (१ प. प)। वाहन—वाहनम्, यानम्। एका भागा. . भागांत—एकस्मात् विभागात् अन्यं विभागम्। गढलेला—मग्न (धा वि.)।

७ श्रीमान् मनुष्य—धनिकः। एकदां—एकदा। शोधणें—अनु + इष् (४ प प)। पेटी—पेटिका। त्याना सांपडली—ते अलभन्त। उचलणें—उद् + धृ, उद् + ग्रह्। इतक्यांत—तस्मिन्नेव क्षणे। घराच्या दाराशीं बसलेला—गृहस्य द्वारे उपविष्टः। मोठ्यानें—उच्चैः। भुंकू लागला—भषणम् आरभत, अभषत्। भुंकणें—भषणम्। नोकर—भृत्यः, किङ्करः, सेवकः। जागे झाले—प्रबुद्धाः अभवन्, अनुधावन्त। पाठलाग करणें—अनु + धाव् (१ प प)। काठी—दण्डः, लगुडः। मारणें—प्र + हृ (प्रहरति), तड् (ताडयति)। शिवाय श्रीमंत. . मिळालें—स. धनिकः धनं पुनर् अलभत।

करणें—दण्ड् ( १० उ प )। आनन्द होणें—मुद् ( आ प. मोदते )। बक्षिस—पारितोषिकम्।

८ वाखाणणें—प्र+शंस् ( १ प प )। बापाला दुःख होईं—बाप. दुःखित अभवत्। फारच—भृशम् ( अ )। तरवार घेऊन—असिना—खड्गेन सह। लपून बसला—प्रच्छन्न. अतिष्ठत्। गर्विष्ठ—गर्वित, अवलिप्त ( वि )। वडिलांच्या पाया पडला—पितुः चरणयो. अपतत्। अविचार—अविवेक.।

९ आवडती बायको—प्रिया भार्या। बसला होता—उपविष्ट आसीत्। आढणें—आ+कृष् ( १ प प )। भक्ति करणें—भज् ( १ प.उ )। अचल—ध्रुव ( वि )। सोडणें—त्यज् ( १ प. प )। नारद मुनि त्याला भेटले—मुनि नारद. तम् अपश्यत्। स्वतः—स्वयमेव, साक्षात् ( अ )। त्याचे पुढें—तस्य पुरतः। म्हातारपणा—वार्द्धकम्। सोपविणें—नि+क्षिप्। पुष्कळ वर्षें—बहूनि वर्षाणि।

१० होऊन गेला—अभवत्। नातू—पौत्र, नप्ता ( नप्तृ )। पारंगत—प्रवीण ( वि )। जिंकणें—जि ( १ प प जयति )। मुख्य प्रधान—प्रमुख. सचिव.। बसविणें—स्थापय ( प्रयोजक )। विद्यालयें स्थापिली गेलीं—विद्यालया. स्थापिता.। त्याला धनुर्विद्येचा नाद होता—स. धनुर्विद्याप्रिय. आसीत्। कलिङ्ग देश—कालिङ्गा.। असंख्य लोक मारले गेले—असङ्ख्या जना. हता। विरक्ति—विराग.।

११ हिरवा—हरित (वि)। त्यांना भूक लागली—ते क्षुधिता अभवन्। माळी—मालाकार। बोलावणें—आ+ह्वे (आह्वयति)। भुकेलेला—क्षुधित (वि)। खावयास—भक्षणार्थम् (अ)। पिकलेलें—पक्व (वि)। किंमत—मूल्यम्। आणणें—आ+नी (आनयति)। विश्रांति घेणें—वि+श्रम् (विश्राम्यति)। परतणें—नि+वृत् (निवर्तते)।

१२ नष्ट होणें—नश् (४ प प)। मूळ—मूलम्। अवस्था—दशा। प्रार्थना करणें—प्र+अर्थ् (१० आ प प्रार्थयते)। कष्टकारक—

